# ऐतरेयोपनिषत्

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि
वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदि-
ष्यामि सत्यं वदिष्यामि
तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम्

ॐ शान्तिः शान्तिः शान्तिः

आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् स ईक्षत लोकान्नु सृजा इति १

स इमांल्लोकानसृजत
अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः
पृथिवी मरो या अधस्तात्ता आपः २

स ईक्षतेमे नु लोका लोकपलान्नु सृजा इति
सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् ३

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम्
मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपाना-न्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ४

इति प्रथमः खण्डः १

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववा-र्जत् ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति १

ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति

ताभ्योऽश्वमानयत्ताः अब्रुवन्न वै नोऽयमलमिति २

ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतम्
ता अब्रवीद्यथायतनं प्रविशतेति ३

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षु-
र्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो
लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो
भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ४

तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति
ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति
तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भ-
वतः ५

इति द्वितीयः खण्डः २

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति १

सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत
या वै सा मूर्तिरजायतान्नं वै तत् २

तदेनत्सृष्टं पराङत्यजिघांसत् तद्वाचाजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुम्
स यद्धैनद्वाचाग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ३

तत्प्राणेनाजिघृक्षत् तन्नाशक्नोत्प्राणेन ग्रहीतुम्
स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ४

तच्चक्षुषाजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुम्
स यद्धैनच्चक्षुषाग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत् ५

तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम्

स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ६

तत्त्वचाजिघृक्षत् तन्नाशक्नोत्त्वचा ग्रहीतुम्
स यद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत् ७

तन्मनसाजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम्
स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ८

तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुम्
स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ९

तदपानेनाजिघृक्षत् तदावयत्
सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः १०

स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति
स ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ११

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत
सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम्
तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति १२

स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति
स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३ १३

तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण
परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः १४

इति तृतीयः खण्डः ३

इत्यैतरेये द्वितीयारण्यके चतुर्थोऽध्यायः ४

उपनिषत्सु प्रथमोऽध्यायः १

पुरुषे ह वा अयमादितो गर्भो भवति
यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवात्मानं बिभिर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म १

तत्स्त्रिया आत्मभूयं गच्छति यथास्वमङ्गं तथा
तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति २

सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव त-द्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं ज-न्म ३

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयतेऽथास्यायमितर आत्मा कृत-कृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ४

तदुक्तमृषिणा
गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति गर्भ एवैतच्छ-यानो वामदेव एवमुवाच ५

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् का-मानाप्त्वामृतः समभवत् समभवत् ६

इति चतुर्थः खण्डः ४
इत्यैतरेयारण्यके पञ्चमोऽध्यायः ५
उपनिषत्सु द्वितीयोऽध्यायः २

कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वा पश्यति येन वा शृ-णोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चा-स्वादु च विजानाति १

यदेतद्धृदयं मनश्चैतत्

संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति २

एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव
बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ३

स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान्कामाना-प्त्वामृतः समभवत् समभवत् ४

इति पञ्चमः खण्डः ५

इत्यैतरेयारण्यके षष्ठोऽध्यायः ६

उपनिषत्सु तृतीयोऽध्यायः ३

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि
वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदि-ष्यामि सत्यं वदिष्यामि
तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम्

ॐ शान्तिः शान्तिः शान्तिः

इत्यैतरेयोपनिषत् संपूर्णा